

# ॥ श्रीदुर्गासपादशतीस्तवराजः ॥

श्रीमंत सरकार गायकवाड महाराज सकाशाल्लब्ध-
धर्मशास्त्र भूषण मित्युपाधिधारिणा द्विवेदि-
विद्याधर तनुजनुषा शास्त्रि वल्लभरामशर्मणा
निर्माय प्रकाशितः

अमदावादे (श्रीनगरे) वीर-शासन मुद्रणालये
मुद्रापितः
प्रथमावृत्तिः ५०० पुस्तकानि



विक्रमार्कं संवत् १९८० मार्गशीर्ष वलक्षपक्षे १५ भानुवासरे

॥ तत्सत् ॥

ॐ तत् सत्

## ॥ समर्पणम् ॥

॥ इंद्र वज्रावृत्तम् ॥

बाला शिवा सैवमताच दुर्गा
दुर्गा शिवा सैवमताच बाला ॥
ईशात्वमेकं बहुनाम युक्तं
भक्तेष्टरुच्या श्रुति संमतंतत् ॥ १ ॥

॥ वसंत तिलका वृत्तम् ॥

चित्तानुरूप वयुनेन विचार्य सम्यक्
कस्मै समर्पण विधिश्च मयाविधेयः ॥
यस्याः कृपायुत निदेश भवस्तवस्य
तस्यै समर्पण विधिश्च घटेत रम्यः ॥ २ ॥
विश्वेशवंद्यहिमशैलसुतापदाब्जे
ब्रह्मादिशेषबुधसिद्ध सुरेश जुष्टे ॥
भक्त्यार्पयामि पठतामिव कल्पवृक्षं
तंस्वीकरोतु जननी जगतां स्तवंमे ॥ ३ ॥

बालाचरण सरोजचंचरीक विद्याधर तनुजनुः

**शास्त्रि वल्लभरामशर्मा.**

विक्रमार्क संवत्

१९८०

मार्गशीर्ष वलक्षपक्षे १५ भानुवासरे

॥ वीरमग्रामे ॥

ॐ

वंदेऽहं जगदानंदहेतुकं गिरिजात्मजम् ॥
विघ्नद्विपाः पलायंते यत्कृपाकेसरीभयात् ॥ १ ॥

# प्रस्तावना॰

इह खलु भारते वर्षे महर्षिभिस्तथेतर बहु पंडितैर्जगदंबाया बहूनिगद्यपद्य बद्धानि बृहल्लघुस्तवकवचस्तोत्रादीनिकृतानिसंति ॥ तर्हिकिमायासेन ? ॥ तत्सत्यम् ॥ परंतुकपिलकोपाग्नि दग्धकेवलस्वपूर्वजोद्धरणार्थं भुवि भगीरथ बहु यत्नलब्धगंगापवित्र वारिणिस्नात्वाऽन्येऽपि निजपितृसद्गतिप्रदं तर्पणं नकुर्वन्ति-किम् ? कुर्वन्त्येव येनतत्पितृणां ॥ सद्गतिरपि भवतीति सुप्रसिद्धम् ॥ अतोनमे मिथ्यायासः अयंतुबालानिदेशादेवकृत इतिविशेषः ॥ पवित्र वंशपरंपरानुगतेष्ट प्रसाद प्राप्त सद्गुरु कृपायोगेन विद्यादिफल रूपविवेक विधेस्तथा पाठादि नियमानुरूपफलादेरावश्यकता मालोच्य किंचिदग्रेविवृणोमि ॥

## ॥ इंद्र वज्रावृत्तम् ॥

सौराष्ट्रके लींबडि राज्यसत्ता ग्रामं शिहाणीत्यभिधान सिद्धम् ॥
विपश्चितां भार्गवगोत्रजानां वासालयं मेऽस्ति कुलोद्भवानाम् ॥ १ ॥
बालाप्रसादापरनामधेयः श्रीबोधजीतत्र पितामहोमे ॥
बाला मनूपासन वाक्यसिद्धो बाला प्रसादः स्वयमेवह्यासित् ॥ २ ॥
तत्सूनुविद्याधरसंज्ञको भूद्विद्यावरिष्ठो जगति प्रसिद्धः ॥
अष्टावधानादिकलासुदक्षो बालार्चन प्रीतिपरः पिताम ॥ ३ ॥
माता शिवाम्बासदृशी शिवाया दिव्यप्रभावौ पितरावभूताम् ॥
ताभ्यांजनिर्मे ससहोदरस्य स्वसृद्वयोपेत शुभानु जस्य ॥ ४ ॥
संस्कार योगेन विहायबालान् भर्गालयं मेपितरौगतौतौ ॥
मत्पूर्वजाराधित शैलबाला कृपा फलाप्तो गुरु सिद्धकालः ॥ ५ ॥
श्रेयस्कराशीर्वचनेन सार्कं दुर्गाविधानं बहु तंत्रमिश्रम् ॥
अध्याप्यमां तद्विविवत्ससिद्धः सच्छास्त्रबोधाय समादिदेश ॥ ६ ॥
तंमंत्रसिद्धं बहुधाप्रणम्य विद्याविशेषायगतो विदेशम् ॥
प्राप्तोहिमां तत्र सुदेशिकार्यः कच्छेशखेंगार नरेशमान्यः ॥ ७ ॥

अध्याप्यमां व्याकरणादि काव्य साहित्यविद्यांश्रुत निर्विशेषम् ॥
हेरंबदीक्षां सरहस्य बालामंत्रंदयालुः समदाच्चमह्यम् ॥ ८ ॥
श्रीविश्वनाथ प्रवराज्ञयाहं कच्छाधिनाथाप्त सुपारितोषः ॥
रम्यां पुरीमेत्यवडोदराख्यां न्यायादिशास्त्राध्ययनायहेतोः ॥ ९ ॥
शालासुछात्रा ध्ययनायराज्ञा राजाधिरामादिगुरूंश्च सौम्यान् ॥
संयोजितान्तान्बहुधा प्रतोष्य तेभ्यः सकाशात्समुपात्तविद्यः ॥ १० ॥
तत्रत्यराज्ञोनियमानुरोधात्प्रावेशिका माद्यतरांसुयोगात् ॥
सम्यक्समुत्तीर्य ततोऽन्य शास्त्र संप्राप्त योगानुगतां परीक्षाम् ॥ ११ ॥
न्यायेपुराणे सविशिष्टकाव्ये होरासुभाष्येच महीधराख्ये ॥
पत्रंप्रमाणं नृपचिह्न युक्तं प्राप्तं तदासुष्ठुगुणांकयोगात् ॥ १२ ॥
श्रीधर्मशास्त्रेऽति गुणांकभावात्सार्मन नाथांकित भूषणाख्याम् ॥
संप्राप्य पदवींसमुपात्तहर्षोरेवांगतो ब्रह्ममुनेः सकाशम् ॥ १३ ॥
पापौघविध्वंसक वारिरेवातीरेऽतिरम्यालय गंगनाथः ॥
तत्राधिवासी सुचिरंतनोभूत्सिद्धिस्वरूपोऽखिल मंत्रसिद्धः ॥ १४ ॥
तच्छ्रीर्थपादस्य महानुकंपा जाताममयिप्रेमपरासुदैवात् ॥
सर्वानवद्योबटुवेषशंभु र्नेर्यविनासिद्ध्यति कोऽपि मंत्रः ॥ १५ ॥
संश्राव्यमांतद्वचनं महात्मा विद्यां बटो श्चोपदिदेशमह्यम् ॥
यत्तद्विधानं शिव तंत्र गोप्यं सर्वंसमासेन ममानुरूपम् ॥ १६ ॥
स्थितोंतिके तद्वचनानुरोधी कालंकियत्सद्गुरु तोषहेतोः ॥
लब्ध्वा तदाशीष महो कृतार्थो गेहंगतोसंस्थितिधर्मयोगात् ॥ १७ ॥
दि घा ऽन्य कार्याय समागतोऽहं ख्यातं पुरं वीरमगामनाम ॥
तत्रार्य धर्मात्म रुचिः सवैश्यो ह्यासिद्धनाढ्योकिल मग्नलालः ॥ १८ ॥
सत्पात्र विप्रार्भक पाठनार्थं शालालयेतत्कृतनूतनेऽहम् ॥
संयोजितस्तेनवराग्रहेण सद्वेतनम्मुख्य गुरोः पदव्याम् ॥ १९ ॥
छात्राणिसद्व्याकरणादि काव्य साहित्य ग्रंथानपठन्ममाग्रे ॥
संस्थाप्य शाला मनुपंचमाब्दे दैवाद्दिवंप्रापसवैश्यवर्यः ॥ २० ॥
हित्वाततो बंधन शृंखलांतां स्वातंत्र्य मिच्छन्स्वयमेवशालाम् ॥
श्रीयुक्त सत्पात्र जनाग्रहेण विद्वत्तयाऽद्यापि वसाम्यतोऽत्र ॥ २१ ॥

विद्याप्रसादोऽव्यवहारयोग क्षेमप्रसादः सुप्रजा प्रसादः ॥
इष्ट प्रसादः स्वजन प्रसादः सर्वस्वमेतद्गुरु संप्रसादात् ॥ २२ ॥
इत्थं समस्तार्य गुरुप्रसादात्शुद्धार्य वंशेजननानु भावात् ॥
बालानिदेशेन मयाकृतेस्तवे यस्याः कृपातोऽस्मिनिमित्त मात्रः ॥ २३ ॥

---

## ॥ अथ विधिः ॥

श्रीमातुःस्तवराजस्य पाठेतत्कृपयोत्तमे ॥
सकामे चाथनिष्कामे विशेषं किंचिदुच्यते ॥ १ ॥

उषसिविधिवत्स्नात्वा शुद्धवासांसिधारयेत् ॥
पुर्वाभ्युदङ्मुखोवापि पवित्रासन माविशेत् ॥ २ ॥

उपास्य तांत्रिकीं संध्यां सम्यक् श्रद्धासमन्वितः ॥
यंत्रेवाप्रतिमांदेव्याः संस्थाप्य पुरतः शुचिः ॥ ३ ॥

गुरुमार्गानुसारेण बहिरंतः समाहितः ॥
सम्यक्पात्राणि संस्थाप्य वाम दक्षिण भेदतः ॥ ४ ॥

आवाहनादिपुष्पांत विधिवत्पूजनं चरेत् ॥
देव्या वरण देवानां ततः पूजन मारभेत् ॥ ५ ॥

दक्षिणे घृतदीपंच वामे गुग्गुल धूपकम् ॥
नैवेद्यंपुरतोदेव्याः शर्करासंयुतंपयः ॥ ६ ॥

आरार्तिकप्रदक्षिणा नमस्कारांतमाचरेत् ॥
इदृक्पूजादि विज्ञान रहिताना मिहोच्यते ॥ ७ ॥

दुर्गांदुर्गेतिनाम्नावै गंधपुष्पादिकांस्वलु ॥
सर्वांपूजांसमाप्यैव नाम मात्रेण केवलम् ॥ ८ ॥

ध्यानादौभक्ति श्रद्धाभ्यां प्राप्यताद्रूप्य मीक्षया ॥
एक चित्तः स्तवस्यास्य ततः पाठं समारभेत् ॥ ९ ॥

बहुपाठा धनुष्ठाने कुर्याद्वादश संख्यया ॥
पाठानेकदिने विद्वान् हविष्याशीजितेंद्रियः ॥ १० ॥

द्विशतोत्तरसाहस्रं चैकविंशोत्तरंशतम् ॥
द्वादशैवेति पाठांश्च कुर्यात्कार्यानुसारतः ॥ ११ ॥

कुमारी बटुकांश्चापियत्नेन परितोषयेत् ॥
यथा शक्त्या सुवासिनी ब्राह्मणान्भोजयेदनु ॥ १२ ॥

शुभकार्यं समुद्दिश्य कुर्यादाराधनंबुधः ॥
शूद्रविट् क्षत्रि वर्णानां पुरश्चरणकर्मणि ॥ १३ ॥

नाधिकारोऽस्ति विप्रैश्च दीक्षितैः कारयेत्सदा ॥
नित्यपाठेतु सर्वेषां संस्कृते प्राकृतेऽथवा ॥ १४ ॥

अधिकारोऽस्ति वर्णानां भक्ति श्रद्धावतांकिल ॥
ब्राह्मणादिकुल स्त्रीणां पाठेवा श्रवणे फलम् ॥ १५ ॥

यंत्र मूर्ती नहिस्यातां घृतदीपाग्रतोऽखिलाम् ॥
कुर्यात्पूजां समासेन तदग्रेपाठमारभेत् ॥ १६ ॥

चैत्रेऽथवाऽश्विने मासि नवरात्रेदिवानिशि ॥
सेवनादस्य पाठस्य कापिसिद्धिर्नदुर्लभा ॥ १७ ॥

कामना रहितानांतु विधिना पाठ मात्रतः ॥
सिद्धिःस्यादिह सर्वेषामंतेसद्गति रक्षया ॥ १८ ॥

भक्त्यावेशेन यत्सर्वं यथा योग्यं प्रदर्शितम् ॥
दुर्जनास्त्वन्यथाभावं गृहिष्यंतिनसज्जनाः ॥ १९ ॥

एतत्सर्वंमयांबायानिदेशेन विवर्णितम् ॥
मर्त्यबुद्ध्याकथंकारं देवगुह्यंहिबुध्यते ॥ २० ॥

यदिचेत्स्खलनंक्वापि मुद्रणादि प्रमादतः ॥
पंडिताः शोधयिष्यंति बाला संतोषहेतवे ॥ २१ ॥

बालापदाब्जपलाशछायामाश्रितः
शास्त्रि वल्लभरामशर्मा

संवत् १९८० मार्गशीर्षे वलक्षपक्षे १५ भानुवासरे

वीरमग्रामे.

॥ ॐ श्री हेरंबायनमः ॥

# ॥ अथ दुर्गा सपादशंती स्तवराजः ॥

---

## ॥ मंगलाचरणम् ॥

॥ अनुष्टुप् ॥

नौमि श्री विश्वनाथं च गुरुं सर्वेष्ट सिद्धिदम् ॥
ब्रह्मानंदं मंत्र मूर्तिं बालास्तोत्रस्य सिद्धये ॥ १ ॥

॥ शिखरिणी ॥

जडं शक्ता कर्तुं कविवरमनाथं धनपतिं
महाराजं रंकं तृणमपि गिरीन्द्रं पराशिवे ॥
अहो साते शक्ति र्मुखरयतिमां सद्गुण कथा-
तनुस्तुत्यै मन्ये निरवधि कृपा पामरजने ॥ २ ॥

## ॥ अथ स्तवराजारंभः ॥

॥ वसंततिलका ॥

आनंद सच्चिति मयीं परदेवतां त्वां
ध्यायाम इत्यनु दिनं वय ममृताय ॥
मंन्वर्थ एष गिरिशेन समार्थितोऽतो
दुर्गां परं परम तत्त्व महं न जाने ॥ १ ॥
संसारदुःखदहनेन सुदग्ध देहः
पापै रनंत जननांत भये न भीतः ॥
सर्वार्तिहारि शरणं श्रुति संमतं ते

---

१ अस्मिन् श्लोके नवार्ण मंत्रार्थः प्रदर्शितः ॥ २ यस्याः परतरं नास्ति सैषादुर्गा प्रकीर्तिता ॥ इत्युपानषत् ॥

मत्वा महेशमहिले शरणागतोऽहम् ॥ २ ॥
त्वत्पाद पद्मकमकरंदरसेन तृप्ताः
संतो भवानि भवपाश विमुक्त बंधाः ॥
येत्वत्पदाब्जविमुखा नरके भ्रमंति
दुर्गे त्वदंघ्रिशरणं ग्रहितं मयाऽतः ॥ ३ ॥
येते यजंति गिरिजे बहिरष्टत्रिंश-
दिव्याः कलास्तदुपरीय किरोच्चयानम् ॥
पात्रादि साधन विधौ गुरुगम्यरित्या
तत्ते पदाब्जमनिशं विबुधाः कृतार्थाः ॥ ४ ॥
यंत्रादि लेखन महो गुरुतो विचार्य

---

२ धूम्रार्चिषादयोवह्नेर्दशकलाः ॥ तपिन्यादयः सूर्यस्यद्वादशकलाः ॥ अमृतादयश्चंद्रस्यषोडशकलाः ॥ मिलित्वा अष्टत्रिंशत्कलाभवन्ति तासुबोधि न्यादयोनिवृत्ति प्रधानाः पंचकलाः

३ उक्तंच श्रीनाथादिभिस्तंत्र ग्रंथेषु ॥

बिंदु त्रिकोणवसुकोणदशारयुग्म मन्वस्रनाग-
दलसंयितषोडशारम् ॥ वृत्तत्रयंचधरणीसद-
नत्रयंचश्रीचक्रमेतदुदितं परदेवतायाः ॥ १ ॥
चतुर्भिः शिवचक्रैश्च शक्तिचक्रैश्चपंचभिः ॥
नवचक्रैश्चसंसिद्धं श्रीचक्रं शिवयोर्वपुः ॥ २ ॥
त्रिकोणमष्टकोणंचदशकोणद्वयं तथा ॥
चतुर्दशारंचैतानिशक्तिचक्राणिपंचच ॥ ३ ॥
बिंदुचाष्टदलंपद्मंतथाषोडशपत्रकम् ॥
चतुरस्रंचतुर्द्वारंशिवचक्राण्यनुक्रमात् ॥ ४ ॥
त्रिकोणे बैंदवंश्लिष्टमष्टारेष्टदलाम्बुजम् ॥
दशारयोः षोडशारं भूगृहं भुवनास्रके ॥ ५ ॥
शैवानामपिशाक्तानां चक्राणांचपरस्परम् ॥
अविना भावसम्बन्धं योजानातिसचक्रवित् ॥ ६ ॥

तंत्रोक्त युक्तिमपि पीठपरार्चनंस्वाम् ॥
सांगां शिवां सपरिवारयुतां समर्च्य
भक्त्या भजंति भुवि धन्यतमामनुष्याः ॥ ५ ॥
किंपंडिता नहि भवंति तव प्रभाव
मालोच्यविस्मय वशाः श्रुतिलग्नमानस् ॥
विद्यात्वमेव भवसिंधुतरी जनानां
वेदान्त डिंडिम इति प्रकरोति नादम् ॥ ६ ॥
आधारहीन मनुजा भुविसंतितेषा
माधारता त्रिपुरसुंदरि संसतांहि ॥
दीने दयाद्रवती भवशर्मदाऽपि
येषांनकुत्र शरणं शरणं त्वमेव ॥ ७ ॥
नोचेच्छिवेत्व मधमोद्धरणक्षमांम
वेदागमेष्वपि सदा पतितोद्धरित्री ॥
रंकावने दृढवृता पुरुपावनाणां
सम्यक् प्रपालनपरा यादृता सुविज्ञैः ॥ ८ ॥
नोचे दिहांब खलुरंकतमोऽति पापी
दीनोऽधमोऽथ शरणालयवर्जितोऽहम् ॥
आधारहीन बहु पामर किं मुक्ता-
श्चैतादृशोऽद्रिदुहिते कथमावकेत्साम् ॥ ९ ॥

---

त्रिकोणरूपिणीशक्तिर्बिंदुरूपःपरेमहेश्वरः ॥
अविना भावसम्बन्धस्तस्माद्बिंदुत्रिकोणयोः ॥ ७ ॥
एवंविभागमज्ञात्वाश्रीचक्रंयः समर्चयेत् ॥
नतत्फलमवाप्नोतिललितानैवतुष्यति ॥ ८ ॥
इत्यादिना विधिनिर्मित यंत्रेषु तंत्रोक्त युक्तं युक्तस्याभिप्रायम् ॥

क्षुत्तृड्व्यथाकुलधियः शिशवोजगत्या
ता माह्वयंति जननीं बहुशः स्वकीयाम् ॥
त्वां भुक्तिमुक्तिफलदां जननीं विहाय
विश्वेशवंदितपदे वद कंभजामि ॥ १० ॥
येषां त्वदंघ्रिशरणं सुदृढं ह्यनन्यं
प्रत्यर्थिभूत मपि विश्वमिदं यदिस्यात् ॥
वालाग्रसंक्षतिरहो न भवे त्कदाचि-
त्तेषां मयासमनुभूत मशेषमंब ॥ ११ ॥
*तारंतु तूर्यपदमेव वदंति वेदा
मंत्राक्षरादि विहितो भजनेष्ट सिध्यै ॥
मोक्षार्थिनः प्रतिदिनं यतयोजपंति
कामादि षड्रिपुगणोद्भवरागमुक्ताः ॥ १२ ॥
वर्णत्रयो परि नितांत विभूषिताऽर्ध-
मात्रोर्ध्व बिंदुयुत मक्षर मद्वितीयम् ॥
तारंत माहुरनघेऽखिल विश्वमूलं
ब्रह्मात्मकं पर शिवा शिवयोः स्वरूपम् ॥ १३ ॥
मात्राच बिंदुरुभयोः सततोक्तमैक्यं
तत्त्वावमर्शगलितात्ममला बुधास्तत् ॥
संचिंतयन्त्यनिश मात्मसुखैकताना
स्तुच्छी कृताब्जजनु शेष शचीश भोगाः॥ १४ ॥
ॐकार एष परमेशपरस्वरुपं
ह्रींकार एष चितिशक्तिपरस्वरुपम् ॥

---

* इतः समणव बाला मंत्रप्रभावोवर्ण्यते.

नो तारतम्यमुभयो रपि किंचिदस्ति
तत्त्वार्थ मेकमनिशं श्रुतयोवदंति ॥ १५ ॥
तारे तथा त्वयिच नाणु तमोऽपि भेद-
स्तारस्तु दैवतमतोऽस्तितव प्रकृष्टम् ॥
सायुज्यतां समुपयांतिजपादवश्यं
जानन्ति तत्त्वामिति तत्त्वविदो महान्तः ॥ १६ ॥
त्वद्बीजवर्णजपशीलवतांजनानां
सिद्धिः शिवेप्रतिपदं कथितामुनीन्द्रैः ॥
ऐकैक बीज महिमान मजादयोऽपि
नालंयथार्थ मितिवर्णयितुं सशास्त्रम् ॥ १७ ॥
दृष्ट्वा वराह माति लुब्धकबाण विद्धं
ऐ ऐ जगाद शिवंबिंदुविहीनबीजम् ॥
जातस्तथापि जगदंब तव प्रसादा-
द्विप्रात्मजो जडतमोहि बुधाग्रयायी ॥ १८ ॥
वाग्देवताश्रित सबिंदुमहर्निशंते
बीजंजपंति भुवियै तवपाद निष्ठाः ॥
स्वप्नेऽपियोग्य पटुवाग्रहिताजडा स्ते
शीघ्रं सुरेज्यसदृशा मनुजा भवन्ति ॥ १९ ॥
बालो मृतार्य जनको वनमेत्यतत्र
राज्याच्च्युतो विगतश्री र्ध्रुवसंधिसूनुः ॥
राजावरोध वृतरक्षक किंकरेण
क्लीबेन साकमवसज्जननीसहायः ॥ २० ॥

---

१ सत्यतपा.

तंक्लीव क्लीव निजकार्यवशात्त्वमुक्तं
ब्रूते स्मराजमहिषीति कुमार माता ॥
आकर्ण्य मातृवचनानि समुग्ध भावात्
क्ली क्ली कला रहित बीजमथोच्चचार ॥ २१ ॥
स्व त्कामराजमपिबिंदु विहीनमेत--
ज्जप्तंजगज्जननि तेन नृपात्मजेन ॥
भौमाननल्प कृपयाऽशुसुदर्शनश्च
भोगानवाप सुरदुर्लभदर्शनं ते ॥ २२ ॥
कन्या स्वयंवर गता न्नृपतिन्विहाय
काशीशजा शशिकला शशिसुंदरास्या ॥
स्वप्नावबोधमवगम्य तवाम्बिकाया-
स्तत्रागतं तमवृणोध्रुवसंधिपुत्रम् ॥ २३ ॥
काशीश्वरेणकृत सादरपारिबर्हो-
कांतायुतस्य विनयाच्छ्वशुरार्चितस्य ॥
स्थानंनिजं जिगमिषोर्बत पूर्ववैरी
मार्गंरुरोध बहुसैन्यगणोयुधाजित् ॥ २४ ॥
येऽन्ये स्वसैन्यसहिता बहवोनृपाला
स्तत्रायुः खलयुधाजितमाश्रितास्ते ॥
युद्धं नितान्तबलवीर्यमदोद्धतैस्तै-
स्सार्धं भयावहमभू ध्रुवसंधिसूनोः ॥ २५ ॥
अश्वैर्गजैर्वररथैः सुपदातिभिश्च
नानास्त्रशस्त्रनिवहै र्युयुधुर्नृपालाः ॥

---

१ काशीराज्ञः सुबाहोः पुत्री ॥

घोराहवारिशर कृत्त सुदर्शनश्च
सस्मार विश्वजननीं परदेवतां त्वाम् ॥ २६ ॥
तत्रत्वमेत्य निजभक्तजनावनार्थं
प्रत्यक्षतामुपगताललितेऽप्यचिन्त्या ॥
भस्मीबभूव तवहुंकरणा युधाजित्
दृष्ट्वा भयात्तदितरे क्षितिपाः प्रयाताः ॥ २७ ॥
संरक्षितो विषमशत्रुभयात्त्वयाऽसौ[1]
साकेतमेत्य मुदितः स्वजनान्वितश्च ॥
जातोऽन्यशक्र इव भूवलयैकछत्रो
रंकं करोति सुरराजसमं कृपाते ॥ २८ ॥
त्वत्काम बीजमनिशं जपतां जनानां
याकापि सिद्धिरमिता भुवनत्रयेष्टा ॥
नो दुर्लभेति बहुशास्त्रवचांसि संति
किं किं न साधयाति ते करुणा प्रसादः ॥ २९ ॥
[2]संपत्प्रदं च विपदंतकरं सुगुह्यं
मंत्राक्षरांतिममुदाहृतमेवबीजम् ॥
बीजत्रयी मनुजपात्तसमस्तकामा
ब्रह्मादयोऽपि जगदीश्वरतांप्रयाताः ॥ ३० ॥
[3]दुर्गे त्वदीयपदपद्मनखस्थतेजः-
पुंजांशलेशमधिगम्यतवप्रसादात् ॥

---

१ सुदर्शननामा. २ तारंतु तूर्यपद मिति श्लोकादारभ्य संपत्प्रद मिति श्लोकांतं प्रणवसहित बालाबीज त्रयस्य प्रभावो वर्णितः ॥ ३ इतः पादादि-शीर्षांतं ध्यानार्थवर्णनम् ॥

चंद्रोऽथ मप्यखिलविश्वविलासलीला-
लावण्य भूषणमभून्निज शुभ्रकान्त्या ॥ ३१ ॥
तं ते पदाब्जतलरागमवेक्ष्यबाले
ध्याने स्थिता मुनिवरामुदमाप्नुवन्ति ॥
तुच्छीकृतार[1] नवरत्न मणिप्रवाल-
कल्हार पाटलकुसुम्भजपादिशोभम् ॥ ३२ ॥
संसारवार्धि पतितो त्त्वरणायपोतं
पादाम्बुजं तवचतुर्विध मुक्ति हेतुम् ॥
अज्ञानतोऽपि यदि चिंतित माद्रिकन्ये
भूयोन जन्म जननीकुहरे कदाचित् ॥ ३३ ॥
दुःखैक तंत्र निरतार्तिहरं शरण्यं
पादारविंद युगुलंभुवि मंगलं ते ॥
तद्ध्यानतो हृदिसकृद्विधि निर्मितापि
दुष्टाक्षरालि रिति भालगताऽन्यथास्यात् ॥ ३४ ॥
येत्वत्पदाब्ज रसपान निषेवणोत्का
नेच्छंति लोकपतिभोगलवं कदाचित् ॥
अब्जेषुसत्सुमकरन्दभरेषु भृंगा
वांछंति नागमद मिक्षुरसंकथं च ॥ ३५ ॥
नाना विपत्तिमय संस्रुति वह्नितापं
तप्तान्समीक्ष्य मनुजान्मुनि चंचरीकाः ॥
पादारविंद नवपल्लव शीतलां ते
छाया महर्निशमुमे समुपाश्रयंते ॥ ३६ ॥

---

१ भौमः ॥

नै ते तरंति गिरिजे हृदिबद्धकामाः
पादारविंद् विमुखा भवदुस्तराब्धिम् ॥
अन्ये सुखेन तवपाद् सरोज निष्ठा-
भावेन गोष्पद् मिवाप्तजनाः कृतार्थाः ॥ ३७ ॥
जिघ्रंतितेंऽघ्रिगतमाल्यमहोऽर्चनांते
नश्यत्युमे सपदिये मनुजा गृहित्वा ॥
तेषां हृदिस्थकलुषाद्रिरनंतजन्म-
जन्मांतरीय निजकर्मभवः स्वयंसः ॥ ३८ ॥
यैस्ते महेशि ननुपूर्व भवे कदाचि-
दाराधनं कृतमतोन पदाम्बुजस्य ॥
दुःखैक मात्र शरणा मनुजा नितान्तं
मन्ये भ्रमंत्यनिश मत्र कुभाग्यभाजः ॥ ३९ ॥
यावन्न प्राप्तिरिहतेंऽघ्रिसरोरुहस्य
वज्रांकुशादि शुभ लांछन लांछितस्य ॥
नाना कुयोनि विपदर्थ करं जनानां
संसारचक्र विषमाटन मस्तितावत् ॥ ४० ॥
विद्यां विहाय भावपारकरीं जनास्त्वां
त्यक्त्वा सुरद्रुम मिवार्तिद् कंटकद्रुम् ॥
क्षुद्रानुपास्य भवबंधमवाप्नुवंति
नूनं नगेशतनये विधिवंचितास्ते ॥ ४१ ॥
श्रुत्वा गुणाननुपमां च्छ्रुतिभूषणांस्ते
येषां नयातिहि कदापि हृदार्द्र भावम् ॥
किंतद्भवानिविषमाश्मकठोर खंडा

स्तेषां हृदि प्रखचिता विधिना कुभाग्यात् ॥ ४२ ॥
ये मानवास्तु महनीयपदाम्बुजे त्व–
ल्लीलाचरित्र मति चित्रकरं त्रिलोक्याम् ॥
नाकर्णयन्ति विषयेषु विवृद्धमोहात्
कातद्गतिर्नंनु भविष्यति तन्नजाने ॥ ४३ ॥

॥ प्रचलित वर्णने पादाम्बुजाष्टकम् ॥

आनंदकंद मकरन्दरसेन पुर्णं
गुंजत्सुगंध गुण लोलुप चंचरीकम् ॥
नानार्चनैक निपुणामर सिद्धजुष्टं
संचिंतयामि सततं हृदिते पदाब्जम् ॥ ४४ ॥
वामे विधौ विविधदुःखदशाविपाके
स्वामीस्वामित्रसुहृदाप्तविवर्जितानाम् ॥
पुसांत्वदंघ्रि शरणालयमागतं त–
द्धयायामि पादकमलं सततं त्वदीयम् ॥ ४५ ॥
त्वत्तः स्थितिं जननमंत मवाप्नुवंति
विश्वान्यमूनिहि चतुर्दशवेदवादः ॥
पादारविंद मज शेष सुरेशसेव्यं
संचिंतयामि गिरिजे हृदयेऽनिशंते ॥ ४६ ॥
गंधर्व यक्ष मनु किन्नर लोकपाल-
विद्याधरामरवधूभिरभिष्ट सिद्धयै ॥
भक्तयार्चितं विबुध पादप पुष्प पुंजे
र्ध्यायामिते रुचिरपाद सरोजमम्ब ॥ ४७ ॥

कर्पूर केसर कुरंग मदाधिवास-
सौगन्धसार मृदु तीर्थ जलाभिषिक्तम् ॥
सिद्धांगनाभि रभिसेवित मासमंतात्
तत्ते पदाब्जमनिशं हृदि चिंतयामि ॥ ४८ ॥
रागादनंग विषमेषु सुविद्धदेह-
छिद्रेषुसत्सु परितापवतां जनानाम् ॥
सद्यः प्रशांतिकर मौषधमद्वितीयं
संचिंतयामि जगदंब तवांघ्रिपद्मम् ॥ ४९ ॥
बाले भवोत्तरण मस्ति पवित्रपोतं
तीर्थं निलिम्प विधि विष्णुनुतं शरण्यम् ॥
भक्तार्तिहं विपदिबंधु मभिष्टदोहं
ध्यायामि धूर्तदमनं हृदिते पदाब्जम् ॥ ५० ॥
कल्याण कल्पतरु माश्रित मानवानां
शांतिप्रदं विविधरोगदवार्दितानाम् ॥
श्रेयस्करं सतत सद्गुण भूषितानां
ध्यायामिते प्रणतपालपदं जनानाम् ॥ ५१ ॥

॥ पादांबुजाष्टकं समाप्तम् ॥

नाना विचित्र नवहीरक पद्मराग-
गोमेद नीलमणि रत्न विनिर्मिताभ्याम् ॥
दिव्यप्रभातति तिरस्कृत सूर्यभाभ्यां
शिंजत्सुजांबुनद किंकिणि हंसकाभ्याम् ॥ ५२ ॥
चंडि स्वचित्तविवरेषु सुशोभितंते
भक्ता भव भ्रमण भीति भरापहारम् ॥

ध्यायंति चे द्रहासि गुल्फ युगंत्वदीयं
पापान्यपास्य चिरजानि भवन्तिपूताः ॥ ५३ ॥

॥ युग्मम् ॥

[1]ब्रह्माच्युतेश्वरसदाशिवरुद्र पंच–
प्रेतासनोपरि सहर्ष विराजितायाः ॥
पीठे स्वकीय करकंज सुलालितंत–
ह्वाले ह्य[2]नंगकुसुमादि सखीगणेन ॥ ५४ ॥
शुंडाविलोभि करिण स्तवजानुयुग्मं
तच्चिंतनेन विशदे ह्वदि मानवा नाम् ॥
सद्यः प्रयाति विलयं विषयादिरागो
गाढांधकार मिव तिग्मकरोदयेन ॥ ५५ ॥

॥ युग्मम् ॥

पंचाननो परिसुखेन विराजितोरू-
द्वंदं सुवारणबुसामदमानहारि ॥
व्यालंबि चारु वरवस्त्र विभूषितंते
कांच्यालसत्कटितटं बहुलार्थ युक्तम् ॥ ५६ ॥
ध्यात्वा स्वचित्त विवरे मुनयो महेशि
संसार वारिनिधि तर्तुमिहोत्सुकाये ॥
रागोर्म्य नंत भवदुःखततिं विहाय
तत्सद्विशुद्धचरिता स्तवयांतिधाम ॥ ५७ ॥

॥ युग्मम् ॥

---

१ ब्रह्मा विश्नुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥
एते पंच महाप्रेताः पादमूलेच कल्पिताः ॥

* २ अनंग कुसुमा च अनंग मेखलादि सख्यः

पीयूषपूर्ण मिव कूपमपापनाभि-
गर्तं विचिन्त्य कुशलानिचरंतिसंतः ॥
दुष्टांतकार्ति भय भारमपास्य बालेऽ
विद्या विशिष्टमसुखं बहि रुत्क्षिपंति ॥ ५८ ॥
यस्मिन्वसंति भुवनान्यमितान्यबाधं
दिव्योदरे लसतिसा त्रिवलिर्बहिश्च ॥
आरोहणार्थ मिव मुक्तिपदं मुनीनां
सोपानपंक्तिरिति गौरि गुणत्रयाणाम् ॥ ५९ ॥
यावच्चितिप्रथम धामवदंतिवेदा
वक्षःस्थलं सवसनंनयनाभिरामम् ॥
प्रालंबिकादि बहु हार मनोहरंते
चैकावली तरलयष्टि मनर्घ्य गुच्छम् ॥ ६० ॥
भ्राजिष्णु वज्रमणि मौक्तिक रत्नमंजु-
ग्रैवेय भूषण विभूषित कंठ देशम् ॥
भक्ता विचिन्त्य हृदि दिव्यपदं प्रयांति
स्वस्योत्तमाकृति तिरस्कृत कम्बु शोभम् ॥६१॥

॥ युग्मम् ॥

बाहून्सहस्रमसि शूलगदारचर्म-
शक्तीषुचापत्ररतोमरकादियुक्तान् ॥
संतः शिवं विदधतो हृदि चिंतनेन
केयूरकंकणभरान्विपद स्तरंति ॥ ६२ ॥
तुच्छी कृतस्थलसरोरुहशोणिमंते
मृद्वंगुलीषु लसितं वर मुद्रिकाभिः ॥

विभ्राजमाननखकांतिछटामनोज्ञं
सचिंत्य पाणितलमिष्टगतिं लभंते ॥ ६३ ॥
ध्यानायनं स्मितसुधासुषमाभिरामं
बिंबारुणाधरछदेन विरोच मानम् ॥
कुंदस्य कुडमल विलोभि रदावलीकं
सालंकृतं हि तिलपुष्पनिभं सुनासम् ॥ ६४ ॥
राजत्कपोल मृदु शुभ्र मयूरवगौरं
शोकाग्निशामकमहौषधमत्युदारम् ॥
सुष्टुश्रुती विलसितार्यमणिप्रवेक–
ताटंककांतिकमनीय सुकर्ण युग्मम् ॥ ६५ ॥
नेत्रत्रयं त्रिविध तापहरं मुनीनां
तत्राद्भुतांजनकला कलिताच्छ तारम् ॥
वैसारिणाम्बुरुह खंजन मानहारि
स्वापांग भंग शमिताप्त जनांतजन्म ॥ ६६ ॥
संमोहनाय समदस्मर मार्गणानां
कूर्चार्धचंद्र विशदे भ्रकुटी दधत्याः ॥
आलोकनामृतझरीषु सदावगाहं
सालोक्यता मनुभवन्ति जनागतास्ते ॥ ६७ ॥
कस्तूरिकादि विहिता मलपत्ररेखा
सौंदर्यसार विरचीकृत शिल्पतंत्रम् ॥
भालस्थलस्थ शशि चंद्रिकया निरस्त-
भक्तार्तिजन्ममरण प्रभवाग्नितापम् ॥ ६८ ॥
नानासुगंध वरतैल सुवासितंते

१२२४९



तं केशपाशमलिभिः परिसेव्य मानम् ॥
सीमंत सुष्टुसरणिं प्रतिभासमाना
सिंदूर चूर्णकृतिरात्म सुखं विधत्ते ॥ ६९ ॥
लक्ष्म्यालयं त्रिदशपादपपुष्पमाला-
संवेष्टनाधिकृत सुंदर नाग पाशम्
सम्याग्विचिन्त्य मनुजास्तु विविक्तदेशे
तं केशवेश मनुवेल मतः कृतार्थाः ॥ ७० ॥
वैडूर्यवज्रयुत हेम मयं किरीटं
भ्राजत्सुधांशु किरणाति प्रकाशमानम् ॥
संचिंतयन्तिवरमूर्ध्नि धृतं हृदाचेत्
ध्यानाग्नि दग्धकलुषाः स्वसुखं भजंते ॥ ७१ ॥
यस्योपमां समुपयातिनकश्चिदेत-
दिदृक्समग्रवदनाम्बुरुहंत्रिलोक्याम् ॥
लावण्य धाम सततं बहुलाभिरामं
तच्चिंतनेनमुनयः कृतिनोभवन्ति ॥ ७२ ॥

॥ कुलकम् ॥

पाटीरचुर्ण सुरभीकृतनिर्विशेष—
संशोभितेनवसनेनमहाधनेन ॥
मोहं प्रयातिवपुयष्टि मनंगकांता
दृष्ट्वासतांचसुलभामसतांदुरापाम् ॥ ७३ ॥
सर्वांगसुंदर मलौकिकमद्वितीयं
ब्रह्मात्मकं सगुणनिर्गुण मक्षरंच
निर्दोष निर्मल निरीह गणालयंतत्

सर्वानवद्य मितितत्त्वमसिस्वरूपम् ॥ ७४ ॥
पादादिशीर्षविहितंमनुजास्तवाम्ब
ध्यायंतिचेद्रहसिरूपमजस्रमित्थम् ॥
ध्यानाधिरूढमनसः कृतिनो भवस्य
पारंप्रयांत्यखिललोक नमस्कृतायाः ॥ ७५ ॥

॥ समाप्तं समस्तस्वरूपध्यानम् ॥

इत्थंध्यात्वाकिमपित्वदग्रेयाचेऽहम्

अन्योन्य भेदकलहास्पदकामुकाये
नानावितडंतर वादमृषाभिमानाः ॥
ध्यायंति नैवजगदंब तवांघ्रिपद्मं
मादर्शनं भवतुमेऽत्रकदापि तेषाम् ॥ ७६ ॥
कालत्रयेऽपितवमुक्तिकरंहिनाम
नो वै वदंति कुटिलाऽसुर भाव भाजः ॥
वांछंति केवलमहो परपीडनं ये
मासंगमोऽस्तु सततंखलपन्नगानाम् ॥ ७७ ॥
नेक्षंतिते रुचिर मूर्तिगत स्वरूपं
लावण्यधाम दयया परिपूर्णमम्ब ॥
नाराधयंति किलकाल भयेकदाचित्
स्वप्नेकदापिनहिदर्शनमस्तुतेषाम् ॥ ७८ ॥
नो ये यजंति सतिद्रव्यगणेसशक्ते
पापोदरार्थं मतिनीचतरंकुकर्म ॥
कुर्वन्तिकालकवलांकितदुष्टदेहा
स्तेषां भवानि किलसंगम एषमास्तु ॥ ७९ ॥

नोयेनमन्ति तवपादतलंकदाचि-
द्विया कुटुम्ब धनरूप गुणाभिमानाः ॥
शारीरभोगभरणाय परस्वपुष्टा
माभून्मृडान्युदर पोषकदर्शनंमे ॥ ८० ॥
अंतर्विषाब्धिविषमामधुवाक्प्रशस्ताः
क्षुद्राः पिशाच सदृशा बहिरास्तिकाये ॥
कापट्यजालजनवंचन कर्मशीला
स्तेषां भवानि सततं नहि दर्शनंस्यात् ॥ ८१ ॥
अज्ञानतो जडधियोजगदीष्टदुर्गा-
लंबोदराच्युत गिरीशादिवाकरेषु ॥
जानन्ति भेद मितरेतरनिंदकाये
तेषां दुराग्रहवतां नहि दर्शनंस्यात् ॥ ८२ ॥
श्रुत्यर्थ गर्भवचनेषु पराङ्मुखाये
चार्वाकभाट्ट जिनदर्शन वावदूकाः ॥
जानान्तिनैव जगदंबतवस्वरूपं
मासंगमोऽस्तुसततंशठनास्तिकानाम् ॥ ८३ ॥
नास्तिक्यदंभकलिदोषविवर्जितानां
श्रद्धावतांत्वयि सुशास्त्रमताश्रितानाम् ॥
श्रुत्युक्तवर्ण विहिताचरणादराणां
तेषां महेशि सततंखलुदर्शनंस्यात् ॥ ८४ ॥
हृद्ध्वांतनाश रविसदृश सांख्ययोग-
वेदान्त तंत्रगुरु गम्य रहस्य विज्ञाः ॥
पाखंड धर्म विमुखाः स्मृति सारभाज

स्तेषा महर्निशमुमे शुभ संगमोऽस्तु ॥ ८५ ॥

नित्यार्चनैक निपुणा विविधोपचारैः
स्वाचारधर्मपरिशीलन संमुखाये ॥
निष्ठायुतास्तवपदाम्बुजशुद्धभक्त्यां
सम्यक् शिवेसततदर्शनमस्तु तेषाम् ॥ ८६ ॥

जन्मांतरेष्वपि भवेऽत्रकदाप्यपर्णे
याचेकृपां कुरुमुहु र्मयिदीनदासे ॥
त्वत्तोऽहमेव मिदृशीं नहि विस्मरेयं
पादारविंदयुगुल स्मरणंत्वदीयम् ॥ ८७ ॥

इतः जगदम्बिकाया धर्मरक्षार्थे पापीनाशरूपं पराक्रमवर्णनं आरभ्यते ॥

निद्रां वितत्यजठरीकृत सर्वजीव-
गोविंदकर्णमलजौ मधुकैटभाख्यौ ॥
तावुद्यता वजवधाय महाब्धिमध्ये
त्वन्मोहपाश वशमेत्यमृतौतदानीम् ॥ ८८ ॥

शापाच्छिवांशमहिषासुरदानवेशं
मायाविनं प्रचुरदर्पयुतं वरेण ॥
तंवाष्कला ग्रमित दैत्यचमू समेतं
पीडाकरं विबुध विप्रगवांनि तान्तम् ॥ ८९ ॥

दिव्यप्रभं सकल देवमयं स्वरूपं
सद्यो विधाय निगमागम धर्मगुप्त्यै ॥
हत्वा खलं धरणिकंटक मप्यजेयं
लोकत्रयं हय सपत्न भयादरक्षः ॥ ९० ॥ कुम्भं

अद्यापिते यजनकर्मरताबुधास्त्व-
द्वावाम[1]स्थ सैरिभमहो खलुपूजयन्ति ॥
सायुज्यता मुपगतस्तवशस्त्रघातात्
दृष्टाकृपानिरुपमा त्वयिमातएव ॥ ९१ ॥

चंडादिमुंडलपनाच्च निशम्य शुंभ-
स्त्वद्रूपवर्णनमलं झटिति मुमोह ॥
सुग्रीवदूत महिनो द्विरिसानुसंस्थां
विश्वैकवंद्यचरणां परदेवतात्वाम् ॥ ९२ ॥

दूतस्त्वदंतिकमुवाच जगत्रयेश-
शुंभस्यपट्टमहिषी भवितुंत्वमर्हा ॥
नानाऽनु भुंक्ष्व सुसुखानि नृपेणसाकं
बालेऽर्घ्यरत्न मपिराजति काचनेन ॥ ९३ ॥

॥ देव्युक्तिः ॥

सत्यंत्वयोदितमिदं ननुबाल्य भावात्
सख्याः पुरः सुगृहिताचमयाप्रतिज्ञा ॥
यो माजये दितिमृधे सधवोममास्तु
रेजाल्म ब्रूहितव शुंभ मितः प्रगच्छ ॥ ९४ ॥

॥ दूतो  : ॥

त्यक्त्वाऽगृहं वितथ मिंदुमुखित्वमित्थं
शुंभं निशुंभमथवा भज भोगलिप्सुम् ॥

१ ॥ देवी दक्षिणे सिंहाय । वामेहिषायनम इति ॥
उतच भाष्टः सायुज्यमीयया इति रहस्ये ॥

त्वाचे ह्लादनु गृहिष्यतिदानवेन्द्रः
पश्चादुपेष्यसि मृगाक्षि नितान्त तापम् ॥ ९५ ॥

॥ देव्युक्तिः ॥

नप्राकृतास्मि शिव विष्णु विरंचिमाता
शक्तयास्तृजामि भुवना निच संहरामि
वेदोदितप्रवरधर्मपथच्युतात्रे
भूत्वायुगं प्रतिजनानाति शिक्षयामि ॥ ९६ ॥
शुंभादिदुष्टदनुजाः क्षितिभारभूता-
स्तेषावधाय ममदेहमवेहिमंद ॥
श्रुत्वा सकोपवचनानि सदूतभावात्
तत्स्वामिनोंतिकमुवाचसमस्तमेतत् ॥ ९७ ॥
शुंभाज्ञया सबलषष्टिसहस्त्रसेना-
भारप्रकंपितवसुंधर धूम्रनेत्रः ॥
यावत्सदृष्टि पथमागतएवतावत्
भस्मीबभूव तवहुंकृतिपावकेन ॥ ९८ ॥
त्रासात्पलायनपराः सुरवैरिणोऽन्ये
सिंहेन केचिदपरेत्वनुभक्षितास्ते ॥
श्रुत्वाऽसुर स्तदवसान मथादिदेश
युद्धायकालसदृशा विवचंडमुंडौ ॥ ९९ ॥
कोपेन त्वन्निटिलदेशभवाऽतिघोरा
कालीकरालवदना युयुधेऽसुराभ्याम् ॥
निक्षिप्य सर्वदनुजानिकमाशुवक्त्रे
तच्चर्वणंच दशनै र्भयदं चकार ॥ १०० ॥

खड्गेन छिन्नशिरसो रुभयोर्गृहित्वा
हस्तद्वयेन शिरसिप्रमुदा परांत्वाम् ॥
अभ्यागतातववरेणजगत्रयेचा-
मुंडेतिनाम महिमानमवापमातः ॥ १०१ ॥
दौत्यं कृतंतव शिवेन गिरीशदूती
नाम्ना निजांशसचिवेतिजगत्प्रसिद्धा ॥
शैवोवरो भुविभवे दितिरक्तबीज-
स्तद्रक्त बिंदुपतनात्खलुतादृशोऽन्यः ॥ १०२ ॥
शुंभेरित त्रिदशशत्रुगणेनसाक-
मागत्यतत्रयुयुधे तवशक्तिभिश्च ॥
ब्राह्म्यादिमातृ विविधास्त्रतनिपातरीण-
रक्तोद्भवाऽसुरगणेन धराप्रकीर्णा ॥ १०३ ॥
आज्ञावशाऽशु निखिलानसुरांश्चकाली
खड्गासिखर्परनृमुंडधराचखाद ॥
त्वच्छस्त्रघात बहु निर्गत मस्यदेहात्
पित्वाननर्त समरे क्षतजं समग्रम् ॥ १०४ ॥
चित्रं गतासुरपि नाकपदंप्रपेदे
मातस्त्वदस्त्र गतकल्मषरक्तबीजः ॥
घोराट्टहासमशिवं किलकालिकाया
स्तत्रासतस्यनिधनंचनिशम्यशुंभः ॥ १०५ ॥
यावन्निशाचरबलानुजसाकमेत्य
शुंभोजुहाव समरे स्मयदुर्मदस्त्वाम् ॥
एह्येहिनारि मदुपेक्षतयात्वमस्मान्

दैत्यान्विहंस्यपि नदृष्टिपथंगतामे ॥ १०६ ॥

॥ देव्युक्तिः ॥

सद्रक्षणायदुरिताशर भक्षणाय
जानीहिमेव्रतमिति प्रखरंदुरात्मन् ॥
बल्यर्थ मेव मृगये ममकालिकाया-
स्त्वादृक् खलानधमरे प्रधनेप्रतिष्ठ ॥ १०७ ॥

यावन्निशुंभपृतनांच जघानकाली
दिव्यास्त्रशस्त्रनिवहैः समिति क्षणेन ॥
तावत्त्वयाऽशुकुलिशेनहतो निशुंभ-
स्तद्देहजोऽन्यरसुरोऽपि खरासिनाम्ब ॥ १०८ ॥

दृष्टवाऽनुजान्त मतिशोकहतोऽपिकोपा-
त्तूर्णंत्वदंतिकमुपेत्यरणप्रवीणः ॥
आलोक्ययल्ललितरूप मलौकिकंते
प्रोवाचमोहवशगः स्मरतापतप्तः ॥ १०९ ॥

दासोऽस्मितेवरयसुंदरि सुंदरंमां
मृद्वंगिमानमपहायसुरेशसेव्यम् ॥

॥ देव्युक्तिः ॥

धिकृत्वां निषिद्ध मलमूत्रगृहाभिलाषिन्
रेकालपाशमधुनात्वमुपागतोऽसि ॥ ११० ॥

अन्याश्रयात्स्मययुतासिनिशाचरोक्तिं
श्रुत्वाऽशु संहृतविभूतिगणां स्वदेहे ॥
सस्त्वांप्रगृह्य युयुधेऽपिगतोंऽतरिक्षं

क्षिप्त स्त्वया क्षितितलेदनुजः प्रकोपात् ॥ १११ ॥

जन्यंनिशातविशिखैर्युवयोः शिवेत्वां

विस्मापनंचिरमभूदितिरिक्तशस्त्रः ॥

उद्यम्यमुष्टिमभिधावतियावदेष-

स्त्वच्छूलघातपतितोकुतलेगतासुः ॥ ११२ ॥

योगीदुरापपदमापतुरद्रिकन्ये

क्षिप्रंत्वदस्त्रवधपूतनिशुंभशुंभौ ॥

उत्पाटितं कठिनशल्यमतस्त्वयायत्

सर्वेजना मुमुदिरे ससुरा त्रिलोक्याम् ॥ ११३ ॥

भंडासुराख्यमखिलासुरराजराज-

मन्यारुणाख्य खलदुर्गमकादिदैत्यान् ॥

हत्वाऽशु संहृतवतीं जगदार्तिमुग्रां

ब्रह्मात्मिकां परशिवां भवतीं नमामि ॥ ११४ ॥

भवाटवीहरंवैतालीय छंदेन जगदम्बाष्टकम् ॥

दुष्टदुर्जन भुजंग भीषणा

कालकूटविषयद्रुमावृताम् ॥

क्रोधकाममदतस्कराकुलां

द्वेषराग कलिदंश संकुलाम् ॥ ११५ ॥

तृष्णिका मृगजलातिचंचला

स्वार्थसिंह किरिखड्गजम्बुकाम् ॥

भ्रांत्यहं कृतिममत्वपर्वतां

सायुधातकनिषादनादिताम् ॥ ११६ ॥

अज्ञता तिमिरदोषदूषितां

वासना त्रिविध तीव्रतापदाम् ॥
दारवित्ततनयेषणानला
स्वार्थबंधुगणझिल्लिकौशिकाम् ॥ ११७ ॥
कर्मभिः सुविकटांभवाटवीं
संभ्रमन्त ममितोऽतिकातरम् ॥
दुष्ट मृत्युजनि संकटाच्चमा-
मुद्धराद्रितनयेऽनुकंपया ॥ ११८ ॥
दुर्जनोऽसियदिमन्यसेऽपिमां
मातृभाव विषमंसुतेषुन ॥
गर्भवासगत बालपादयोः
क्षेपणं भवतिकिं तदागसे ॥ ११९ ॥
यादृशोऽस्मिखलुतादृशोस्म्यपि
त्वत्पदाश्रित मवेहिमांशिवे ॥
नाम मात्र भजनाद्भवाटवीं
संविसृज्यबहवोगतिं गताः ॥ १२० ॥
वेदतंत्र विधिपूजनादिकं
यंत्र मंत्रजपशास्त्र सद्गुणान् ॥
वेद्मिनोजननि शिल्पजाःकलाः
पामरेभवदयावती मयि ॥ १२१ ॥
विस्मरिष्यसि मृडानिमांयदा
दुर्बलस्य ममकागतिस्तदा ॥
त्वांविनान भुवनत्रयेसुहृ-
द्यत्समिच्छसिकुरुत्वमम्बिके ॥ १२२ ॥

॥ मालिनीवृत्तम् ॥

अहिपति विधिमुख्यायांतिनो पारमस्य
ललित गुणगणाब्धेस्त्वत्कृपालेशतोयत्
तववरगुणनुत्यावर्णने जल्पनंतत्
कृतमयि लघुबुध्यास्वीकुरुत्वंमयाम्ब ॥ १२३ ॥

॥ भुजंगप्रयातम् ॥

शठाःश्लाघयंतुनवामेऽस्तिचिंता
मयाभक्तिभावाद्गुणास्तेप्रगीताः ॥
सतांकल्पवल्ली समस्तोत्रपुष्पां-
जलिंबर्हिगे त्वत्पदाब्जेऽर्पयामि ॥ १२४ ॥

॥ शार्दूल विक्रीडितम् ॥

इत्थं येमनुजाःसपादशतकश्लोकेष्टसिद्धिप्रदं
सद्भक्तया प्रपठंति पूजनविधौदुर्गेत्वदीयस्तवम् ॥
यांत्यन्तेऽनिशमव्ययंशुभमणिद्वीपेसुधाब्धिस्थिते
भुक्तवेऽहप्रचुरंसुखंबहुविधंश्रीधाम दिव्यंतव ॥ १२५॥

अथ स्तवराजकर्तुर्नाम प्रदर्शनं तथाफलंचश्लोकद्वेयन ॥

॥ उपजाति छदः ॥

विद्याधरोऽभूत्त्रिपदा प्रसादा-
त्तस्यात्मजोवल्लभराम नामा ॥
कृतःस्तवस्तेन गुरोःप्रसादा-
द्भूयान्मुदेऽसौजगदंबिकायाः ॥ १ ॥

शुचिर्भूत्वाऽस्यदीपाग्रे सततंपाठमात्रतः ॥
नरःसिद्धिमवाप्नोतिनवरात्रेविशेषतः ॥ २ ॥

अस्यस्तवराजस्यन्यासादिकं विनापिपाठेऽथवा
श्रवणे कृतेसकलेष्टसिद्धि र्भवतीतिनिर्विवादम् ॥

॥ विशेषविधिस्तुप्रस्तावनायां द्रष्टव्यः ॥

॥ इतिश्री दुर्गासप्तपाद् शतीस्तवराजः ॥

॥ समाप्तः ॥

## ॥ प्रस्तावना शुद्धिपत्रम् ॥

| पृष्टांकः | श्लोकः | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ५ | | ८ | पितणां | पितॄणाम् |
| ६ | १८ | १ | दिया | दिष्ट्या |
| ७ | ९ | १ | ताद्रप्य | ताद्रूप्य |
| ८ | १२ | २ | सुवासिनी | सुवासिनी |
| ८ | १३ | २ | शूद्रविट | शूद्रविट् |

## ॥ स्तवराज शुद्धिपत्रम् ॥

| पृष्टांक | श्लोकः | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ९ | ४१ | १ | भावपारकरीं | भवपारकरीं |
| ९ | ४१ | १ | विद्या | विद्यां |
| १४ | ६४ | ३ | कुडमल | कुड्मल |
| १८ | ८९ | १ | च्छिद्वाश | च्छिद्वाश |
| १९ | ९४ | ३ | योमाजये | योमांजये |
| १९ | ९४ | ५ | दूतो | दूतोक्तिः |
| २० | ९५ | ३ | त्वाचे | त्वांचे |
| २० | ९७ | २ | तेषा | तेषा |
| २३ | ११५ | १ | भीषणा | भीषणां |
| २३ | ११६ | १ | चंचला | चंचलां |
| २३ | ११६ | ४ | सायुधातक | सायुधांतक |
| २४ | ११७ | ३ | षणानला | षणानलां |
| २४ | ११८ | २ | मभितो | मभितो |
| २५ | १२५ | ५ | द्वेयन | द्वयेन |

# જ્યોતિષકાર્યાલય.



અમારા જ્યોતિષકાર્યાલયમાં કેશવીની જન્મપત્રિકા, ગ્રહલાઘવના સ્પષ્ટ ગ્રહો સાથેની જન્મપત્રિકા, સાધારણ જન્મપત્રિકા, ષડ્વર્ગના ટપકા, જન્માક્ષર, પ્રશ્ન ઉપરથી પ્રશ્નોત્રી વિગેરે બનાવવામાં આવે છે તથા પૂર્વાચાર્યોના ગ્રંથોના આધારથી સપ્રમાણ ફળાદેશ, મુહૂર્ત, પ્રશ્ન વિગેરે પણ કહેવામાં આવે છે. એક વખત કામ સોંપી ખાત્રી કરશોજી.

**જ્યોતિર્વિદ્ છોટાલાલ વલ્લભરામ વિદ્યારામ શાસ્ત્રી.**

ઠે. સુતારફળી—વિરમગામ.



## અર્પણપત્ર, પ્રસ્તાવના–શુદ્ધિપત્ર.

| પાનું | શ્લોક | લાઈન | અશુદ્ધ | શુદ્ધ |
|---|---|---|---|---|
| ૧ | ૦ | ૧ | લ | લી |
| ૧ | ૦ | ૧૧ | આધકારી | અધિકારી |
| ૩ | ૪ | ૨ | હવે | હવેં |
| ૩ | ૫ | ૩ | ાવશ્વ | વિશ્વ |
| ૪ | ૬ | ૧ | ગુણોદધ | ગુણોદધિ |
| ૪ | ૮ | ૩ | જનાન | જનનિ |
| ૪ | ૮ | ૪ | પેલા | ઘેલા |
| ૫ | ૦ | ૬ | ભાગીરથ | ભગીરથ |
| ૬ | ૦ | ૬ | વિદ્યાપર | વિદ્યાધર |
| ૬ | ૦ | ૬ | માતાપતા | માતાપિતા |
| ૬ | ૦ | ૧૨ | ‹તા | પિતા |
| ૬ | ૦ | ૨૧ | પુવક | પુર્વક |
| ૬ | ૦ | ૨૭ | પરિક્ષા | પરીક્ષા |
| ૬ | ૦ | ૨૭ | પરિક્ષા | પરીક્ષા |
| ૭ | ૦ | ૧૧ | વષફળ | વર્ષફળ |
| ૭ | ૦ | ૧૨ | ત્રપુરા | ત્રિપુરા |
| ૮ | ૦ | ૧૬ | ાવધિ | વિધિ |

---

## સ્તવરાજનું શુદ્ધિપત્ર.

| પાનું | લાઈન | અશુદ્ધ | શુદ્ધ |
|---|---|---|---|
| ૧ | ૧૧ | દિક્ષા | દીક્ષા |
| ૨ | ૨૫ | ભૂગહે | ભૂગૃહે |
| ૨ | ૨૬ | શવ | શિવ |
| ૩ | ૨ | દિક્ષા | દીક્ષા |
| ૪ | ૨૨ | અવા | એવા |
| ૫ | ૨૨ | પારાધ | પારધિ |
| ૬ | ૧૭ | ધ્રુવસાધ | ધ્રુવસંધિ |

| | | | |
|---|---|---|---|
| ૭ | ૨૭ | બદલા | બદલો |
| ૮ | ૧૪ | ।સહારૂઢ | સિંહારૂઢ |
| ૮ | ૧૯ | ઇદ્રિજ | ઇંદ્રજ |
| ૧૧ | ૬ | કરતો | કરતા |
| ૧૧ | ૧૮ | કડાકા | કડકા |
| ૧૨ | ૨૨ | અધવાસિત | અધિવાસિત |
| ૧૩ | ૧ | એટલ | એટલે |
| ૧૩ | ૨૬ | શક્ત | શક્તિ |
| ૧૬ | ૩ | તત્ર | તંત્ર |
| ૨૦ | ૧૮ | પર | પરમ |
| ૨૧ | ૧૦ | દત | દૂત |
| ૨૨ | ૫ | શેપ | શેષ |
| ૨૨ | ૨૦ | પૃથ્વ | પૃથ્વિ |
| ૨૩ | ૬ | શકતિ | શક્તિ |
| ૨૪ | ૬ | ભયભિત | ભયભીત |
| ૨૪ | ૨૧ | નશુભ | નિશુભ |
| ૨૪ | ૨૫ | કે | કૈ |
| ૨૬ | ૧૮ | જગતન | જગતને |
| ૨૭ | ૩ | મરવાના | મારવાના |
| ૨૭ | ૬ | અધભૂત | અધિભૂત |
| ૨૭ | ૬ | અધદૈવ | અધિદૈવ |
| ૨૭ | ૧૩ | દુગે | દુર્ગે |
| ૨૭ | ૧૬ | ત તો | તુ તો |
| ૨૭ | ૧૭ | દાકરા | દીકરા |
| ૨૮ | ૧૮ | કલ્પના | જલ્પના |
| ૨૮ | ૨૬ | પજન | પૂજન |
| ૨૯ | ૭ | ઉદ્દચ્ય | ઉદ્દિચ્ય |
| ૨૯ | ૮ | નામનો | નામના |





# શ્રી દુગાસિપાદ શતીસ્તવરાજનું

# શુદ્ધ ગુજરાતી ભાષાન્તર.


રચીને પ્રપિદ્ધ કર્ત્તા,

શ્રીમત સરકાર ગાયકવાડ મહારાજા તરફથી

ધર્મશાસ્ત્રમાં ભૂષણ પદવી પામેલ

**વિદ્યારામ તનુજ શાસ્ત્રિ વલ્લભરામ.**

વીરમગામ.

ઠે. સુતારફળી.



પ્રત ૫૦૦. સવત ૧૯૮૦.

આવૃત્તિ ૧ લી.


યોગ્ય આધિકારીઓને વિના મુલ્યે
આપવામાં આવશે

શ્રી ગણેશાય નમઃ

# અર્પણ પત્રિકા.



છંદ ઇંદ્રવજ્રા.

બાળા શિવા તેજ ગણાય દુર્ગા દુર્ગા શિવા તેજ ગણાય બાળા,
નામો ઘણાં વસ્તુ ગણાતિ એક જાણે ગુણી શાસ્ત્રતણો વિવેક. ૧

છંદ વસંત તિલકા.

જેની કૃપાથિ ગિરિરાજ ચડે અપંગ,
જેની કૃપાથિ જન સિંધુ તરે સુસંગ;
જેની કૃપાથિ વિષ થાય સુધા સમાન,
એવા દયાળુ શિવ દૈવતને પ્રણામ. ૧

બાળા શિવાય જગમાં નથિ કોઈ મારૂં,
સાચા સગા ભગવતી બહુ મે વિચાર્યું;
ભૂલું કદાચ ભવ પાશતણા કુસંગે,
માગું ક્ષમા ત્રિપુર સુંદરિ! એ પ્રસંગે. ૨

આવુ નહીં ભવ વિષે દરખાસ મ્હારી,
સંભારિ વાર કરજો નમુકો વિસારી;
માયા વિલાસ બહુ મોહ પમાડિ મારે,
માયા ફળો વિષય કષ્ટ કળા વધારે. ૩

કાળા કષાય બહુ જન્મતણા અનેક,
કાપો કૃપા કરિ હવે ગણિ દીન એક;
આ ચિત્તમાં વિમળ ભક્તિતણો વિવેક,
આપો મને અતિ ઉદાસ કરો ન છેક. ૪

માગેજ પુત્ર ખુશિથિ નિજ માનિ પાસ,
એમાં ન લાંછન મને જગદંબ! ખાસ;
છો આપ વિશ્વ જનની નથિ હું બહાર,
માટે કૃપા કરિ કરો મનને ઉદાર. ૫

બાળા ગુણોદધિતણો નહિ કોઈ પાર,
પામે વિરંચિ સુર શેષ બુધો લગાર;
માજી ! તથાપિ તવ પૂર્ણ દયા નિદેશ,
જેથી કર્યું ગુણ કથાનક માત્ર લેશ. ૬

ભાષા નિબંધ રચિ સંસ્કૃતનોજ સાર,
કોને સમર્પણ કરૂં મનનો વિચાર;
જેની કૃપાથકિ થયું પરિપૂર્ણ કામ;
તેને સમર્પણ ઘટે કરવુ તમામ. ૭

કલ્યાણકારિ પદ પંકજ છે તમારૂં,
તેમાં સમર્પણ ભવાનિ ! કરૂં છુ સારૂં;
સ્વીકારજો જનનિ ! બાળક બોલ કાલા-
ઘેલા પરંતુ મમ માનસને સુખાળા. ૮

બાળા પદપંકજભૃંગ શાસ્ત્રિ વલ્લભરામ વિદ્યારામ.

વીરમગામ સુતારફળી. સંવત ૧૯૮૦ માર્ગશીર્ષ ૧૫ ભાનુવાર.

શ્રી ગણેશાયનમઃ

# પ્રસ્તાવના.

આ ભરતખંડમાં મોટા મહર્ષિઓએ તથા પ્રાચીન વિદ્વાનોએ જગદંબાના સ્તોત્ર, અષ્ટક, સ્તવરાજ વિગેરે બનાવ્યા છે. છતાં આસ્તવરાજથી શું ફળ છે? એમ કદાચ માનનારાઓને માટે એટલુંજ કહેવાનું છે કે પૂર્વે કપિલ મુનિના કોપાગ્નિથી રાજા ભાગીરથના ૬૦ હજાર પૂર્વજો બળી ભસ્મ થયા હતા. પછી તેમના અકાળ મૃત્યુના હેતુથી, તેઓનીજ સદ્દગતિ માટે શિષ્ટોના કહેવાને માન્ય આપી પરંપરા ચાલતા મહા પ્રયાસથી ભગીરથ ગંગા લાવ્યા ને તે ગંગાના પવિત્ર જળના તર્પણથી પોતાના મહૂંમ પૂર્વજોનો ઉદ્ધાર કર્યો તે તો જગત્ વિદિત છે.

ત્યારબાદ તેજ ગંગાના પવિત્ર જળથી બીજા મનુષ્યો પણ શ્રદ્ધાથી તર્પણ વિગેરે કરે છે; તો તેમની શુદ્ધિ સદ્દગતિ વિગેરે નથી થતી? થાય છેજ ને તે પ્રત્યક્ષ છે કે તે કરનારાઓની શુદ્ધિ તથા તેમના પૂર્વજોની સદ્દગતિ વિગેરે તમામ થાય છે, માટે આ પ્રયાસ પણ મિથ્યા નથી ફળ રૂપજ છે. કારણ કે પરમેશ્વરના નામનો મહિમા એવો છેકે તે વારવાર ગવાય તેથી નિષ્ફળ થતો નથી, પણ ફળરૂપજ થાય છે. આ સ્તવરાજનુ ગુજરાતી ભાષાંતર કરવાનો હેતુ તો માત્ર એટલોજ છે કે સંસ્કૃત ભાષાના યથાર્થ જ્ઞાન વિનાના સ્ત્રીપુરૂષોને પણ પોતાના હિતને માટે ઉપયોગી થઈ પડે માટેજ આ કરવાની જરૂર જણાતા, કરેલ છે. વળી શુદ્ધ વંશ પરંપરા હોય તોજ પરમેશ્વર તેને દૈવી કાવ્ય ગુણાનુવાદ વિગેરેની પ્રેરણા કરે છે. શાસ્ત્રમાં પણ લખે છે કે જો શુદ્ધ રૂષિવંશનો હોય તોજ દૈવી નવા કાવ્યો સ્તોત્ર વિગેરે બનાવી શકે છે. શિવાંશ હોય તોજ, શિવાદિ ઉત્તમ દેવતાઓના પુજનમાં તેને રૂચિ થાય છે. દેવતાના અંશવાળો હોય તોજ, અન્નાદિક દાનો દેવામાં રૂચિ ધરાવે છે ને વિશ્નુના અંશવાળો હોય તોજ પ્રથિવીપતિ થાય છે. આથી અમારી કેવી શુદ્ધ પરંપરા છે, તેને માટે થોડુ જણાવવાની જરૂર જણાતા જણાવુ છું.

(સૈરાષ્ટ્ર) કાઠીઆવાડના એક ઝાલાવાડ નામના ભાગમાં શીહાણી નામનું લીંબડીની રાજ્ય સત્તાનુ ગામ કે જેમાં રાજધાની પ્રથમ ત્યાંજ હતી ત્યારબાદ લીંબડીમાં રાજ્ય સ્થાપ્યુ. તે શીહાણી ગામમાં રાજ્યના આશ્રિત

સમર્થ પંડિત શુદ્ધ ભાર્ગવગોત્રના અવટંકે દવે ( દ્વિવેદી ) આણંદજી નામના બ્રાહ્મણ હતા. જેમના વંશજો હાલ લીંબડી તથા શીહાણી બેય ઠેકાણે છે. તે પરંપરા ચાલતા શુદ્ધ વંશમાં શીહાણી ગામમાં બેચરજી ( બાળાપ્રસાદ ) નામના પવિત્ર બ્રાહ્મણ, ભગવતી ત્રિપુરાના ઉપાસક તે ઇષ્ટ પ્રતાપે કરી વાક્ય સિદ્ધિને પામેલા કેવળ બાળાના પ્રસાદરૂપજ તે મારા પિતામહ હતા.

તેમના પુત્ર નામે વિદ્યારામ ( વિદ્યાપર ) તેઓ પરંપરા ગત પવિત્ર દીક્ષાથી બાળાના વિધિ સાથે યજનમાં ઘણા કુશળ, તેની સાથે અષ્ટાવધાન, સારા શાસ્ત્રો, યોગ્ય વ્યવહાર, કળા, વિગેરેમાં ઘણા દક્ષ ગણાતા, તે મારા પૂજ્ય તીર્થ રૂપ હતા. તેમના પવિત્ર સ્ત્રી, ભગવતી સમાન ગુણવાળા નામે શિવાંબા તે મારા માતા હતા. પુર્વોક્ત માતાપિતા થકી અમો બે ભાઈ તથા બે બેનો એમ ચાર ફરજન હતા. અમારી બાળદશામાં સસ્કારે કરી, તે પવિત્ર માતા, પિતા શિવલોક સિધાવ્યા બાદ બેનો સાસરે ગઈઓ હું મારા નાના ભાઇને લઈ મોસાળ ગયો. ત્યાં એક સિદ્ધ પુરૂષ મારા વૃદ્ધોએ કરેલા બાળા યજનના પ્રતાપથી મને મળ્યા, ને તેમણે સાધારણ તંત્ર સિદ્ધ દુર્ગાર્ચન બતાવ્યુ, ને સારા સદ્‌ગુરૂ પાસે શાસ્ત્રો ભણવાની આજ્ઞા કરી, કે તરતજ મારા ભાઇને સાથે લઈ ભૂજમાં મૂળ હળવદના રહીશ, જેમણે કાશીક્ષેત્રમાં રહી ઘણા વર્ષ અભ્યાસ કર્યો હતો તેમને ભૂજના મહારાજાએ પૂર્ણ માનથી વર્ષાસન આપી ત્યાં રાખેલા, ને ગજાનન તથા બાળાના પરઉપાસક શાસ્ત્રીજી વિશ્વનાથભાઈ પાસે ગયો. તેમણે પૂર્ણ દયાથી અમોને પોતાનેજ ઘેર પુત્ર માફક રાખી, નાના ભાઇને તેના સસ્કારયોગથી આંગ્લ વિદ્યા ભણાવવાની યોજના કરી, મેમને પ્રસન્નતા પૂર્વક વ્યાકરણમાં કૌસુદી, તથા પંચકાવ્ય, સાહિત્ય વિગેરે ભણાવી રાજ્ય તરફથી પારિતોષિક અપાવ્યાબાદ શુદ્ધ શાસ્ત્રોક્ત મંત્ર દીક્ષા આપી કહ્યુ કે મારા આશીર્વાદથી તુ વડોદરામાં જાને ત્યાં કંઈક ન્યાય જ્યોતિષ વિગેરેનો અભ્યાસ કરિ લે; ને પછી બતાવેલા મંત્રોનો વિશેષ વિધિ બતાવનાર તને મળશે ને ઇષ્ટ બાળા ગજાનન ફળરૂપ થશે. આ પ્રમાણે ગુરૂ મહારાજની આજ્ઞાને અનુસરી વડોદરામાં આવી ન્યાય શાસ્ત્રશાળામાં દાખલ થયો, ત્યાં પણ પૂજ્ય રાજારામ શાસ્ત્રિ વિગેરેની કૃપાથી અભ્યાસ કરી, સરકારી વર્ષાસન પરિક્ષાઓ જેમાં પ્રવેશ પરિક્ષા આપ્યા બાદ કાવ્ય અલંકાર, જ્યોતિષ, પુરાણ, યજુર્વેદ ભાષ્ય, તથા ધર્મશાસ્ત્ર વિગેરેમાં પાસ થયો, ને ધર્મશાસ્ત્રમાં સારા ગુણાંકો મળવાથી ભૂષણ પદવી મળી.

પછી નર્મદા તટે ગંગનાથમાં સમગ્ર મંત્રોનિ સિદ્ધ મૂર્તિ, મહાસમર્થ, ગુરૂ, નામે વિખ્યાત બ્રહ્માનંદજીની પૂર્ણ કૃપાથી જે જે પુર્વોક્ત મંત્ર વિષયો કરાવ્યાબાદ બહુક શિવારાધન વિગેરેથી કૃતાર્થ કર્યો. ઘેર આવ્યાબાદ કોઈ પ્રસંગે વીરમગામ આવવાથી ધર્માત્મા શેઠ શ્રી મગનલાલ જેચંદ તેઓએ વીરમગામની સંસ્કૃત પાઠશાળામાં મુખ્ય ગુરૂ તરિકે મારી નીમણુંક કરી તે પાઠશાળામાં ઘણા વર્ષ સુધી વિદ્યાર્થીઓનું પઠનપાઠન શરૂ રહ્યું, ને થોડા ઘણાં વિદ્યાર્થિઓ પણ યોગ્ય થયા. પછી શેઠ સાહેબ સ્વર્ગસ્થ થયા બાદ શાળાના વ્યવસાય બંધનને લીધે નિવૃત્ત થયાબાદ અત્રેના કેટલાક સદ્‌ગૃહસ્થોના આગ્રહથી સતત નિવાસ રાખ્યો. ઈષ્ટ કૃપાથી સ્વતંત્ર રીતે ઈષ્ટાર્ચન થયા કરે છે. ને અન્નોદક પણ અવિછિન્ન ચાલ્યા કરે છે. વળી વિદ્વાન હોવાથી સંસાર યાત્રાનો ઉદ્યોગ જ્યોતિષ રીતે અષ્ટોત્તરી, કેશવી, જન્મ પત્રિકા વર્ષ ફળો; પ્રશ્ન,-જન્માક્ષરો તથા સપ્તાહ પારાયણો યજનયાજન વિગેરમા ત્રિપુરાની કૃપા છે. તો આ ઉપરથી તારણ માત્ર એટલુંજ કે અમારા વંશમા ગુરૂભક્તિ, મંત્ર દીક્ષા, વિદ્યા વિગેરની પરંપરા સારી હોવાથી, આસ્તવરાજ કેવળ જગદંબાના નિર્દેશથી થયો છે તેમાજરા પણ સંશય નથી હવે શા હેતુથી નિર્દેશ થયો હશે, તેવી દેવ ગુહ્ય બાબત મનુષ્ય બુદ્ધિથી સમજવી અશક્ય છે. આ બાબતમા કેટલાક દુર્જનો કોઈ જુદા પ્રકારનો અન્યથા ભાવ લેશે, તો તેઓ ચોકસ પ્રત્યવાયી થશે. મને તો કંઈક ઈષ્ટની કૃપા હોવાથી બાળાએ નિમિત્ત માત્રજ કરેલ છે. બાકિ સ્વયમેવ પોતેજ કર્તા છે. કામના રહિત મનુષ્યોને પવિત્ર થઇ માત્ર પાઠજ કરવાથી જન્મ મરણ થતુ નથી.

હવે આમા મારા પોતાના અનુભવ સિદ્ધ કઇક સકામ પાઠ પ્રયોગ વિગેરેનો વિધિ, એવો છે કે સ્નાનાદિકથી પાવત્ર થઈ પવિત્ર વસ્ત્રો ધારણ કરવાને ધૃત દીપ સામો રાખી અથવા મૂર્તિ, યંત્ર વિગેરે હોયતો તેનુ સાધારણ પુજન કરિ નેની જમણી બાજુ દીવાને રાખવો જો મૂર્તિ યંત્ર વિગેરે જગદંબાના ન હોયતો દીપનાજ સામા પૂર્વાભિ મુખે બેસી, સંસ્કૃત જાણવાવાળાને સંસ્કૃત ગુજરાતિ જાણવાવાળાને ગુજરાતી પાઠ, અંદર બતાવેલ ધ્યાન વિગેરેથી યુક્ત થઈ દેવતામા એક ચિત્ત કરી પૂર્ણ શ્રદ્ધા રાખી કરવો. ધુપ ગુગળ-અથવા અગરબતી, નૈવેધ દૂધ, સાકર વિગેરે ધરાવવા. કંકુ, કેસર ચંદન વિગેરેથી જ્યારે પૂજન કરવુ હોય ત્યારે ઉક્ત પુજનના અનભિજ્ઞને દુર્ગા=દુર્ગા=દુર્ગા=

અાવાજ માત્ર નામથી કરવું. આ પ્રમાણે હમેંશા નિયમિત જો કરેતો તે આ લોકમાં સંસ્કારથી આવેલા અનેક આવરણોને દૂર કરી અભીષ્ટ સુખ મેળવી અંતે સદ્દગતિ પામે છે તે ચોકસ વિશેષ મુશ્કેલી વાળા કાર્યોમાં સારા શુદ્ધ સંકલ્પ રાખી ઉત્તમ, મધ્યમ કનિષ્ટ આવા વિભાગ પરત્વ-૧૨૦૧-૧૨૫-૧૨-આવા પાઠો કરવા અથવા પવિત્ર બ્રાહ્મણો પાસે કરાવવાં પણ તેમાં એટલુ યાદ રાખવુ કે કોઇનુ અનિષ્ટ થાય તે બાબતનો સંકલ્પ કરી ન કરવા પોતાની વિપત્તિ, અથવા આવેલા કર્મ જન્ય, અથવા આગંતુક, અનેક જાતના સંકટો ઈશ્વિરી દૂર કરી સુખી કરે આવો શુદ્ધ સંકલ્પ રાખવો.

વિશેષ પાઠો હોય ત્યારે એક દહાડે બારથી વધારે પાઠો ન કરવા છેવટે કાર્ય પરત્વ પાઠો પુરા થયાબાદ કુમારીકા=૯=૫=૩=બટુક પાંચ=ત્રણ=એક=કાર્ય પરત્વ, એમને વસ્ત્રાલંકાર ભોજન વિગેરેથી પ્રસન્ન કરવા=બ્રાહ્મણ સુવાસિની યથાશક્તિ જમાડવા. નવરાત્ર ચાર=માઘના, ચૈત્રના, અષાઢના, આષોના તેમાં આ યુગમાં વિશેષે કરી ચૈત્ર, તેના કરતા પણ આશ્વિના અતિમાન્ય છે ને તેમાં નવ દીવસ અથવા રાત્રે જો યથાવિધિ આ પૂર્ણભક્તિ શ્રદ્ધા બ્રહ્મચર્યાદિ રાખી કરે તો તેને કલ્પવૃક્ષ સમાન ફળરૂપ છે, આ જગદંબાનીજ નિર્દેશ કૃપા છે, હું તો નિમિત્ત માત્ર છુ. આ વિધિ પવિત્ર બ્રાહ્મણો પાસે કરાવવાથી શીઘ્રફળરૂપ જરૂર થશે.

વળી પંચ બ્રહ્મ, વિશ્નુ-શિવ-દુર્ગા-ગણપતિ-સૂર્ય-આ એકજ છે. નામો માત્ર જુદા તે તો ભજનની રૂચી માટે છે. માટે આ પાંચમાં જે દુરાગ્રહ રાખી ભેદ બુદ્ધિમાને છે, તેઓ અધોગતિ પામે છે. આમ સર્વ વેદશાસ્ત્ર પુરાણ દરેકનો મત છે. આમાં કોઈ દ્દષ્ટિદોષ અથવા છાપ દોષ હોય તેને વિદ્વાનો સુધારી વાંચશે. ઇતિશિવમ.

દુર્ગાચરણ સરોજ ચંચરીક
શાસ્ત્રિ વલ્લભરામ વિદ્યારામ.

વીરમગામ સુતારફળી. સંવત ૧૯૮૦ માર્ગશીર્ષ ૧૫.

श्रीगणेशाय नमः

# શ્રી દુર્ગા સપાદ્ શતી સ્તવરાજનું ગુજરાતી ભાષાંતર.

## મંગળાચરણ.

યોગીમૃગ્ય અતર્ક્યવૈભવ મહાવિદ્યાદ્રિસંચ્છેદક.
ભક્તોના ભયદાતૃ વૈરિગણનું બુદ્ધિ પ્રભાભેદક॥
સંસારાર્ણવમગ્ન આપ્તજનનું સંતારક [1]શ્રી [2]અજ.
આપો વિઘ્ન વિદારિ સિદ્ધિ મુજને [3]હેરંબ પાદાંબુજ॥૧॥

સર્વ ઇચ્છિત સિદ્ધિઓના દેનાર મંત્રમય સ્વરૂપ શ્રિયુત્‌વિદ્યાપ્રદ ગુરૂ શાસ્ત્રીજી વિશ્વનાથજી તથા નર્મદાતટસ્થ સદ્‌ગુરૂ યોગીન્દ્ર દિક્ષાગુરૂ બ્રહ્માનંદજી તેઓને આ સ્તવરાજની સિદ્ધિ માટે નમસ્કાર કરૂં છું. ૧

હે પરાંબે! આપની શક્તિ જડને કવીશ્વર બનાવે છે અને (અનાથ) નિર્ધનને મોટા ધનવાન બનાવે છે. રંકને રાજા બનાવે છે, અને તૃણને મેરૂપર્વત સમાન બનાવે છે. ઓહો! એવી આપની બળવાળી શક્તિ મને પણ આપના સૂક્ષ્મ સદ્‌ગુણોનું સ્તવન કરવા વાચાળ બનાવે છે જેથી માહરા ગરીબ ઉપર આપની પૂર્ણ કૃપા છે એમ માનું છું. ૨

નોટ—૧ શ્રી શોભાયમાન. ૨ અજ-અવિનાશી. ૩ હેરંબ-ગણપતિ.

# સ્તવરાજનો આરંભ.

સત્–ચિત્–આનંદરૂપી બ્રહ્મમયી ( બ્રહ્મવિદ્યા ) પર દેવતાને મોક્ષને માટે અમે હમેશાં ધ્યાન કરીએ છીએ, આવા અર્થ સાથેનો નવાર્ણમંત્ર મહાદેવે પોતાનાજ મુખથી જાતે પ્રતિપાદન કરેલ છે. તેથી હે જગદંબે ! દુર્ગા શિવાય બીજું તત્ત્વ કોઈ વધારે હોય એમ હું જાણતો નથી. ૧

હે જગદંબ! સંસારમાં દુઃખરૂપી અગ્નિથી દગ્ધશરીરવાળો, અને કર્મજન્ય પાપોથી થતાં ઘણાંજ જન્મ મરણના ત્રાસથી ભય ભીત થયેલો હું, વેદોએ પ્રતિપાદન કરેલું અને સર્વ પ્રકારની પીડાનું નાશકારક એવા આપને શરણે આવેલો છું. ૨

કારણ કે હે મા ! આપના ચરણકમળના મકરંદ (રસ) ના મદથી તૃપ્ત થયેલા સત્ પુરૂષો સંસારના પાશબંધનથી છુટા થાય છે. અને આપના ચરણકમળથી વિમુખજીવો અનંતદુઃખોને સહન કરતા નરકોમાં ભ્રમણ કરે છે. એ ત્રાસથી મે આપના ચરણ શરણને ગ્રહણ કર્યું છે. ૩

હે ગિરિજે! બહાર યંત્રાદિકઉપર પૂજન કરવાવાળા જેઓ દશ અગ્નિ–કળા ધૂમ્રાર્ચિષ વિગેરે તપિનિ તાપિની આદિ, બાર સૂર્યકળા, અને અમૃતા વિગેરે સોળ ચંદ્રકળા, મળીને એકંદર ૩૮ કળાઓ છે, તો ગુરૂની અજ્ઞાનુસાર અંતર્યાગ કરીને જે પંડિતો બતાવેલા માર્ગથી પાત્રાસાદન કરીને તે દિવ્ય ૩૮ કળાઓથી પર પીઠ ઉપર ચૈતન્ય સુશોભિત આપના ચરણકમળને હમેશાં પૂજે છે તેઓ ધન્ય ધન્ય છે. ૪

[1]હે મા! આપ એકજ છો પણ ભકતોને ભજન કરવાની રૂચિને

---

૧ નોટ—બિંદુ, ત્રિકોણ, અષ્ટકોણ, બેવાર દશ કોણ, ચૌદકોણ, અષ્ટદલ, ષોડશદળ, ત્રણ ગોળ વૃત્ત, ભૂગહની ત્રણ ત્રણ રેષા, આમ મળીને ભગવતીનો શ્રીયંત્ર થાય છે. ૧ શ્રીયંત્રમાં નવ ચક્ર છે, તેમાં ચાર શિવ ચક્રો છે, ને "પાંચ શક્તિ ચક્રો છે, એમ નવ ચક્રો મળીને શિવશિવાનુ સ્વરૂપ જણાવ્યુ છે. ૨ તેમાં ત્રિકોણ, અષ્ટકોણ, બે બારના દશકોણ, અને ચૌદ કોણ આ પાંચ શક્તિ

